श्रीलक्ष्मीनारायण–श्रीबँदरीनाथ–श्रीकेदारनाथ–श्रीकालिका–श्रीपूर्णपीठदेवता:

श्रीनाथाङ्घ्रिसरोजैकभक्तकूर्माद्रिभूपतेः ।
श्रीमन्मोहनचन्द्रस्य मुदा भाति जगन्मुदे ।

श्री मन्महाराजाधिराज श्री मोहनचन्द्रदेवैः श्री मन्महाराजे रणबहादुरशाह श्री बहादूरशंसेरजंगदेवेभ्यो धर्मपत्रं संलिख्य दत्तम्—

गोरक्षधीशमस्मन्मित्रमस्मन्मित्रं च गोरक्षाधीशमित्रं गोरक्षाधीशशत्रुः कूर्माचलाधीशशत्रुः कूर्माचलाधीशशत्रुश्च गोरक्षाधीशशत्रुर्गोरक्षाधीशहितचिन्तनेऽस्माभिरास्थेयमस्मद्धितचिन्तने तैरिति व्यवस्थितसमयो निर्वाह्यः श्री मदुभाभ्यामेतद्विषये च लिखितदेवताः साक्षिण्यः कृताः कृतसमयविपर्ययकारिणश्चैता... अनिष्टकारिण्यः स्युस्तद्रक्षितुश्च धर्माभीष्टवृद्धिकारिण्य इति ।

अंकाकाशर्षिभूमी (१७०९) परिमितशके कालयुक्ताख्यवर्षे
मासे माघाभिधाने गणपतितिथौ शुक्लपक्षेब्जवारे ।
श्री गोरक्षेशकूर्माचलनरपयोः सन्धिदार्ढ्यैकबीज
पत्रं सत्यप्रतिज्ञं प्रलिखितमदः पञ्चदेवाभिपुष्टम् ।